पूगकृत । त्रि० पुञ्जीकृते ॥ अपूग पूग सम्पद्यमान कृत: इत्यर्थे श्रेण्यादय ' कृतादिभिरितिसमासे० श्रेण्यादिषुच्व्यर्थवचनमिति च्व्यर्थता ॥

पूगतिथ । त्रि० पूगानापूरणे ॥ बहुपूगेतिडटितिथुगागमविधानादसख्यात्वे पिडट ॥

पूगपात्रम् । न० पूगपीठे । फलव के ॥

पूगपीठम् । न० काटकोले । पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री० कुहली । विवाहसम्बन्धिपुष्पताम्बूले ॥

पूगफलम् । न० उद्वेगे । चिक्कण्याम् ॥

पूगयाजक । पुं० बहुयाजके ॥

पूगरोट . । पु हिन्तालवृक्षे ॥

पूगिका । स्त्री० क्रमुके ॥

पूगिकाफलम् । न० पूगीफले ॥

पूगी । स्त्री० पूगे । पूगवृक्षे ॥

पूगीफलम् । न० उद्वेगे । पूगफले ॥

पूजक । त्रि० पूजाकर्त्तरि ॥

पूजनम् । न० अर्चने । पूजायाम् । । यथा ॥ शास्त्रप्रणामशुश्रूषादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीय '। त्रि० श्रुताचाराभिजनादिभि पूजायोग्ये ॥ पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री० नमस्यायाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनाचंनधनदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्या सामान्यानुष्ठानयथा । आदावृष्यादिकन्यास करशुद्धिस्तत परम् । अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयञ्चदिग्बन्ध प्राणायाम स्तत परम् । ध्यानपूजाजपश्चैव सर्वतन्त्रेष्वयंविधिरितियामलवचनम् ॥ पूजनम् । पूज० । चितिपूजीत्यङ् ॥

पूजार्ह . । त्रि० मान्ये । अर्घभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजामर्हति । अर्हपूजायाम् । अर्हहत्यच् ॥ स्त्रियापूजार्हा ॥

पूजित । त्रि० सत्कृते । अर्चिते ॥ पूज्यतेस्म ॥ पूज० । क्त ॥ देवे ॥ पूजितोय सुरासुरैरित्यादौभूतेक्तोनतुवर्त्तमाने० तेन तृतीयातत्रोपपद्यते । अन्यथाक्तस्य चवर्त्तमानइतिषष्ठीस्यात् ॥

पूजितव्य . । त्रि० पूजनीये ॥

पूजिल । पुं० देवतायाम् ॥ त्रि० पूज्ये ॥

पूज्य ।। पु० श्वशुरे ॥ त्रि० वन्द्ये पूजार्हे । प्रतीक्ष्ये ॥ पूजार्हा व

था । गुरूणामपिसर्वेषां पूज्या : पञ्चविशिषत ' । तेषामाद्यास्त्रय : श्रेष्ठास्तेषामातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठ ' भ्राताचभर्ताचपञ्चैतेगुर वस्मृताइतिकौर्मे उपरिभागे ११ अध्याय ' ॥ पूज्यते । पूज० । । अचोयत् ॥ पूजयितुमर्हं . । पूज० । अर्हेकृत्यतृचश्चेतियत् ॥ सर्वस्यैवहिदानस्यग्रहीतागुरुरुच्य ते । कन्यायाश्चैव विद्याया : प्रदा तापूज्यतेगुरु . ॥

पूज्यपाद ' । पुं० भगवच्छङ्कराचार्ये ॥

पूत . । पु० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते । अपनीततुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादौसामन्यप वित्रे० स्वभावपवित्रे वा । पवित्रे मेध्ये ॥ दृष्टिपूतन्यसेत्पादवस्त्र पूतजलपिबेत् । सत्यपूतांवदेद्वा च मन . पूतसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ्० पूञ्० वा । क्त . ॥ पवतेस्मवा । पूङोगत्यर्थेतिक्त ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतो ' स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतु । पुं० इन्द्रे ॥ पूता.क्रतवो येन ॥

पूतक्रतु । स्त्री० देव्याम् ॥ पूता : क्रतवोययासा ॥

पूतगन्ध . । पुं० वर्वरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतञ्चतत्तृणञ्च ॥

पूतद्रु : । पु० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतञ्चतद्धा न्यञ्च ॥

पूतना । स्त्री० हरीतक्याम् ॥ पूतना स्त्रिमतीसूक्ष्मेतिनिरूपणात् ॥सिन्धु देशजाखल्पत्वक्तुहृदस्थिर्हरीतकी लेपनेप्रशस्तेतिराजवल्लभ : ॥ गन्ध मांस्याम् ॥ बालरोगविशेषे ॥ बाल मातृकाविशेषे ॥ दानवीविशेषे । बकासुरभगिन्याम् ॥ अहोबकीय स्तनकालकूटजिघांसयापाययदप्य साध्वी । लेभेगतिंधात्र्युचितात- तोन्यंकवादयालुंशरणंव्रजेम ॥ पू- तकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारि . । पुं० बालमुकुन्दे । श्री कृष्णे ॥ पूतनायाअरि ॥

पूतनासूदन : । पुं० श्रीकृष्णे ॥ पूत नासूदितवान्०सूदयतिवा । सूद- क्षरणे । नन्द्यादित्वाल्ल्यु ॥

पूतनाघ्न । पुं० श्रीकृष्णे ॥ पूतना- हन्ति । हन० । क्विप् ॥

पूतपाप । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पु० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत ' शुद्ध. सत्त्वादिगुणसम्बन्धरहित आत्मा स्वरूपयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्तः करणे ॥ पूतश्चात्मायस्य ॥

पूति . । स्त्री० दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के ॥ न० रोहिषतृणे ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पूञ० । तिन्तिडीकादयश्चेति० इकन् ॥ न० विष्टायाम् ॥

पूतिकरज : । पुं० लट्टाकरञ्जवृक्षे । कालिकारके । कलहनाशने । काष्टवतिकरञ्जे । काँटाकरञ्जइति० भा० ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज ' । पुं० पूतिकरजे ॥

पूतिकर्णक ' । पुं० कर्णरोगविशेषे ॥ तल्लक्षणयथा । कर्णविद्रधिपाकाद्वाजायतेचाम्बुपूरणात् । पूयस्रवतिवापूतिसज्ञेयः पूतिकर्णकः ॥ अस्यौषधयथा । निर्गुण्डीसुरसस्तैलसिन्धुधूमरजोगुडः पूरणात्पूतिकर्णस्यशमनोमधुसंयुत ' ॥ अथवा । वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजा-तीपत्ररसेनवेति चक्रपाणिदत्त ॥

पूतिका । स्त्री० मार्जायाम् ॥ पोइ० प्र० लताशाके । उपोदक्याम् ॥

पूतिकामुख । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुमञ्जीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते ' पावनस्यकाष्ठ वा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध ' । पुं० गन्धके ॥ हिङ्गुदीवृक्षे ॥ न० रङ्गे ॥ त्रि० दुर्गन्धे ॥

पूतिगन्धि । } त्रि० दुर्गन्धे
पूतिगन्धिक }

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु ' । न० देवदारुणि ॥

पूतिनस्य : । पु० नासारोगभेदे ॥ तल्लक्षणयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतपूतिनस्यप्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुस्वरसव्योषसम्भवे ' । पाचितंलावणतैलपूतिनासागदजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धववृहतीफलशिग्रुस्वरसदन्ताभि . । तैलङ्गोजलसिद्धंनस्यं स्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं० श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ॥

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलेष्वस्या पाक कर्षोतिङीष् ॥
पूतिमयूरिका । स्त्री॰ अजगधायाम् ॥
पूतिमेद । पु॰ अरिमेदे ॥
पूतिवात । पुं॰ बिल्ववृक्षे ॥ अधोवायौ ॥
पूतिवृक्ष । पुं॰ श्योनाके ॥
पूतिशारिजा । स्त्री॰ खट्टाश्याम् ॥
पूतिक । पुं॰ गधमार्जारे ॥ घोडा करञ्ज इ॰ भा॰प्र॰ करञ्जविशेषे ॥ लताविशेषे ॥
पूतिकरञ्ज । पु॰ लट्टा स्वकरञ्जे ।
पूतिगण्ड । पु॰ पूतिकीटे ॥
पूतिभाव । पुं॰ दौर्गन्ध्ये ॥ क्लेदे ॥
पूत्यण्ड । पु॰ गन्धकीटे ॥ गन्धैणे ॥ यस्यनाभौमृजनाभिर्जायते ॥
पूप । पुं॰ अपूपे । पिष्टके । पूआ॰ इ॰भा॰ ॥ यथा ॥ समितागुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोमृदुपूपक ॥ अपूप , पुष्टिदोवल्योहृद्योगुरुतर स्मृत । पित्तानिलहरोवृष्य सुपक्वोरुचिकारक ॥ पवनपू: । पूञ्॰स॰क्विप् । पुवपाति॰पिवतिवा । पारक्षणे॰पानेवा । आतइतिक ॥
पूपला । स्त्री॰ पोलिकायाम् ॥
पूपाली । स्त्री॰ पोल्याम् ॥
पूपाष्टका । स्त्री॰ आग्रहायणीपूर्णि माया परत कृष्णाष्टम्याम् ॥
पूपिका । स्त्री॰ पूलिकायाम् ॥
पूयम् । न॰ पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । क्षतजे । मलजे । पीप॰राध॰इ॰भाषा ॥
पूयनम् । न॰ रक्तविकारे । पूये ॥
पूयरक्त । पु॰ नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै । नासास्रवेत्पूयमसृग्विमिश्र तपूयरक्त प्रवदन्तिरोगम् ॥
पूयारि । पुं॰ निम्बपादपे ।
पूयालस । पु॰ सन्धिगतरोगभेदे ॥ लक्षणंयथा । पक्व शोफ सन्धिज सस्रवेद्य सान्द्र पूयपूतिपूयालस स ॥ इतिसुश्रुत ॥
पूयोद । पु॰ नरकान्तरे ॥
पूर । पु॰ जलसमूहे । अम्भसावृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न॰दाहागुरुणि ॥
पूरक । पुं॰ प्राणवायौ , शनैर्वामनासापुटेन॰दक्षिणनासापुटेनवा सव्यापसव्यन्यायेनान्त प्रवेशने ॥ वाह्येनवायुनामुक्तं शक्तिसीमप्रपूरणम् । पूरक सततभ्यासात्सुगुर्वपिविकर्षयेत् ॥ नासिकोत्कृष्टउच्छ्वासोध्मात पूरकउच्यते ॥ आत्मानुसन्धाने ॥ व्रह्मैवास्मी तियावृत्ति पूरकोवायुरीरित ॥ पूरीआप्याय

ने । खलु ॥ बीजपूरे ॥ गुणकाङ्के ॥
पुं० प्रेतदेहनिष्पादकाशौचकादेय
द्रव्यपिण्डे । त्रि० पूरणकर्त्तरि ॥

पूरण । पुं० सेतौ ॥ विष्णुतैले ॥ न०
अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्न-
टे ॥ वानतन्तुषु ॥ पिष्टप्रभेदे ॥
हिङ्गुधान्यजलेमांससुखिन्न सूक्ष्मकु
ट्टितम् । सयुक्तहिङ्गुजीरार्द्रबीजपू-
रैलसैन्धवै ॥ घृतेतप्तेपरिभृष्ट-
धूपितमांसपूरणम् ॥ मांसस्यपूरणरु
च्यं हृद्यं पुष्टिकरंपर । वातपित्तहरंब
ल्यं मन्दाग्निकफनाशनम् ॥ त्रि०पू
रके । पूरणकर्त्तरि ॥ पालनकर्त्तरि
॥ पृणाति । पृपालनपूरणयो । ल्यु
ट् ॥ पूर्य्यतेऽनेन । पूरी० । करणेल्यु
ट् ॥

पूरणी । स्त्री० शाल्मलिद्रुमे ॥ पटार-
म्भकसूत्रेषु ॥ पूरणकार्य्याम् ॥ पूर
यति । पूरी० । ल्युट् । ङीप् ॥

पूराम्लम् । न० वृक्षाम्ले ॥

पूरिका । स्त्री० पूपविभेदे । पूरी०
कचौरी०इ०भा० ॥ यथा । माषा-
णापिष्टिकांयुञ्ज्याल्लवणार्द्रकहिङ्गु
भि । तयापिष्टिकयापूर्णासमि-
ताकृतपोलिका ॥ ततस्तैलेविपक्वा
सापूरिकाकथिताबुधै । रुच्यास्वा
द्वीगुरु स्निग्धावातपित्तासृदूषिका
। चक्षुस्तेजोहरीचोष्णापाकेवातवि
नाशिनी। तथैवघृतपक्काऽपिचक्षुष्या

रक्तपित्तहृत् ॥ बदरचूर्णपूरिकातु
। घृतमिश्रकणिक्यायामेलितपञ्चमां
शकम् । बदरत्वग्भवंचूर्णंजलेना
लोड्यपीडयेत् ॥ पूरिकाघृतसंपक्वा
खण्डपाकविलेपिता । पूरिकावद
रोत्थिश्चास्निग्धापित्तहराहिमा ॥
मधुराळ्वातघ्नी सराच्छर्द्दिविना
शिनी । एवविप्रायखर्जूरशर्करानारि
केरकै. ॥ द्राक्षयावेसुपूर्यैस्तुपूरि
का पूर्ववत्पचेत् ॥

पूरित । त्रि० कृतपूरण । पूर्णे ॥ पूर्य्य
तेस्म । पूरी० । क्त । वादान्तेति
पक्षेइट् ॥ गुणिते ॥

पूरुष । पुं० पुरुषे । नरे ॥ पुंसि ॥
चेतने ॥ यथा । यस्मादृविश्वमुदेति
यत्ररमतेयस्मिन्पुनर्लीयतेभासाय
स्यजगदृविभातिसहजानन्दोज्ज्वल
यन्महः । शान्तं शाश्वतमक्रियंयम
पुनर्भावायभूतेश्वरम् द्वैतध्वान्तम
पास्ययान्तिकृतिन. प्रस्तौमितपूरु
षमिति ॥ पुरति । पुरअग्रग
मने । पुर कुशन् । अन्येषामपी
तिदीर्घ । पृषोदरादिर्वा ॥ यद्वा
। पूरयति पूर्यतेवा । पूरी०वा०
कुशन् ॥

पूर्ण । त्रि० व्याप्ते ॥ पूरिते ॥ पु०
शक्ते ॥ समर्थे । सकले ॥ पूर्य्यतेस्म
पूरी० । कर्त्तरिकर्मणिवाक्त । वा
दान्तेतिसाधु : ॥

पूर्णक'। पुं॰ स्वर्णचूडपक्षिणि ॥ कुत्सित'पूर्णः। सञ्ज्ञायांकन् ॥

पूर्णकुम्भः। पुं॰ भद्रकुम्भे। जलपूरितघटे ॥ पूर्णश्चासौकुम्भश्च ॥

पूर्णकोष्ठा। स्त्री॰ नागरमुस्तायाम् ॥

पूर्णचन्द्र.। पुं॰ सम्पूर्णेन्दुभयाष्टम्योर्मध्यस्थेन्दौ ॥ पूर्णश्चासौचन्द्रश्च ॥

पूर्णता। स्त्री॰ पर्याप्तौ ॥

पूर्णपात्रम्। न॰ वस्तुपूर्णपात्रे ॥ वर्द्धपत्रे। पूर्णानके ॥ उत्सवकालेहर्षात्तृगृहीतवस्त्रालङ्कारादौ ॥ होमकर्मणिब्रह्मदक्षिणायाम् ॥ हर्षादुत्सवकालेयद्लङ्काराम्बरादिकम्। आकृष्यगृह्यतेपूर्णपात्रंपूर्णानकञ्चतत् ॥

पूर्णमा। स्त्री॰ पौर्णमास्याम् ॥

पूर्णमास.। पुं॰ पौर्णमासयागे ॥

पूर्णमासी। स्त्री॰ पूर्णिमायाम् ॥

पूर्णवीज.। पुं॰ वीजपूरे ॥

पूर्णवैनाशिक.। पुं॰ वैनाशिके ॥ वैशेषिकास्तावदर्द्धवैनाशिका. सर्वक्षववादिनस्तुपूर्णवैनाशिकत्वेनप्रसिद्धा' शाङ्कर ॥

पूर्णा। स्त्री॰ पञ्चमीदशमीपूर्णिमामावास्यासु ॥

पूर्णानकम्। न॰ वर्द्धापने ॥ आनके॥ पटहे ॥ पात्रे ॥ पूर्णपात्रे। हर्षात्तुउत्सवकालेवस्त्राद्याकर्षणे ॥

पूर्णावतार:। पुं॰ नृसिंहे ॥ रामे ॥ परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहन्ता। स्त्री॰ पराहन्तायाम्। यथाहुर्वार्तिककारा। भुक्तयथाङ्गं कुक्षिस्थस्तात्मत्त्वं नैवपश्यति। पूर्णाहन्ताकवलितविश्वंयोगीश्वरस्तथेति

पूर्णिका। स्त्री॰ नासाच्छिन्नीनामकपक्षिणि ॥

पूर्णिमा। स्त्री॰ पौर्णमास्याम्। शुक्लपक्षान्तिमतिथौ ॥ साद्विविधा। यथा। राकाचानुमतीचैवद्विविधा पूर्णिमामता। पूर्वोदितकलाक्षीणे पौर्णिमास्यानिशाकरे ॥ पूर्णिमानुमतीज्ञेयापश्चास्तमितभास्करे ॥ यस्मात्तामनुमन्यन्तेदेवतापितृभि'सह। तस्मादनुमतीनामपूर्णिमाप्रथमा स्मृता ॥ यदाचास्तमितेसूर्येपूर्णचन्द्रस्यचोद्गम:। युगपत्सोत्तराराकात्तदानुमतिपूर्णिमा॥ राकान्तामनुमन्यन्तेदेवतापितृभि. सह। रञ्जनाच्चैवचन्द्रस्यराकेतिकवयोऽब्रुवन् ॥ तस्याजातस्यफलयथा। कन्दर्पतुल्योयुवतिप्रियश्चन्यायाप्तवित्त' सततसहर्ष'। शूरोवलीशास्त्रविशारदश्चस्तुपूर्णिमाजन्मनियस्यजन्मो:॥ पूरी॰। भावेक्त:। पूर्णचन्द्रस्यपूरणम्॰ तेननिर्वृत्ता ॥

पूर्तम्। न॰ खातादिकर्मणि ॥ आदिनादेवकुल्यादियह:। तद्गम्। पुष्करिण्य: सभावापीदेवतायतनानिच। आरामश्चविशेषेण

पूर्त्तकर्मविनिर्दिशेत् ॥ अपिच । वापीकूपतडागानि देवतायतनानि च ॥ अन्नप्रदानमाराम पूर्त्तमित्यभिधीयते ॥ इति ॥ इष्टापूर्त्तीय इत्यत्र पूर्त्त तद्विनाकृतम् ॥ आरामादिक्रियाजफले ॥ मालमे ॥ त्रि० पूरिते ॥ छन्ने ॥ म् स्थम् पूर्यतेस्म वा । पू ० । भाविकर्मणिवाक्तं नच्चास्य तिनिष्ठानत्वं न ॥

पूर्त्तिः । स्त्री० पर्याप्तौ । उपसम्पन्ने । पूरणे ॥

पूर्व । त्रि० पूर्वजे ॥ प्राचि ॥ आद्ये ॥ अग्रे ॥ श्रुतिभेदे ॥ न० कारणे । पूर्वभाविनि ॥ पुमान् क्लि ॥ अतिक्रान्ते ॥ पूर्वति । पूर्वपूरणे । अच् । पृ० ॥

पूर्वगङ्गा । स्त्री० रेवायाम् । नर्मदानद्याम् ॥ पूर्वाचासौगङ्गाच ॥

पूर्वज । पुं० ज्येष्ठभ्रातरि ॥ अनादौ ॥

पूर्वजाः । पुं० भूमिदिव्यपितृगणे । व्यसनभवेषु । कव्यवालादिषु ॥ पूर्वस्मिन्कालेजाताः सप्तम्यांजनेर्डः ॥

पूर्वजा । स्त्री० ज्येष्ठभगिन्याम् ॥ टाप् ॥

पूर्वजिन । पुं० अतीतजिनविशेषे । मञ्जुघोषे । शार्दूलवाहने ॥

पूर्वदिक्पतिः । पुं० इन्द्रे ॥

पूर्वदिक् । स्त्री० प्राच्यांदिशि । पूर्वस्याम् ॥

पूर्वदेवः । पुं० असुरे । दैत्ये ॥ पूर्वश्चासौदेवश्च । पूर्वापरप्रथमेत्यादिना समासः ॥ यद्वा । पूर्वदेवः । अन्यायाद्विदेवत्वाद्भ्रष्टः । सुप्सुपेतिसमासः ॥

पूर्वदेश । पुं० सूर्योदयोपलक्षितेदेशे । वर्तनौ ॥

पूर्वपक्षः । पुं० शुक्लपक्षे ॥ पूर्वश्चासौपक्षश्च ॥ शास्त्रीयप्रश्ने । सिद्धान्तविरुद्धकोटौ । चोद्ये । देश्ये । फक्किकायाम् ॥

पूर्वपक्षपादः । पुं० चतुष्पाद्व्यवहारान्तरर्गतप्रथमेपादे । भाषायाम् । प्रतिज्ञायाम् । पक्षे ॥

पूर्वपर्वतः । पु० उदयाचले ॥ पूर्वपर्वतः ॥

पूर्वफल्गुनी । स्त्री० अश्विन्यादिनक्षत्रान्तर्गतैकादशेनक्षत्रे ॥ तत्रजातस्यफलंयथा । शूरस्त्यागीसाहसी भूमिभर्त्ताकोपाक्रान्तः सशास्त्रिरालोतिदक्षः । धूर्तः क्रूरोत्यन्तवाचालिकः प्राक्फल्गुन्यस्य जन्मकाले चयस्य ॥

पूर्वफल्गुनीभवः । पुं० बृहस्पतौ ॥

पूर्वभद्रपदः । पुं० प्रोष्ठपदासु । पञ्चविंशतिमेनक्षत्रे ॥

पूर्वभद्रपदाः } स्त्री० { अश्विन्यादिसप्तविंशतिनक्ष-
पूर्वभाद्रपदाः }

त्रान्तर्गतपञ्चविंशतितमेनक्षत्रे । प्रो

ष्ठपदासु ॥ तत्रजातस्यफल । जि- तेन्द्रिय · सर्वकालासुदक्षोजितारि पक्ष खलुतस्यानित्यम् । भवेन्मर्त्यो यान्सुतरामपूर्वापूर्वापदाभाद्रपदा प्रसूतौ ॥ पूर्वाश्चताभाद्रपदाश्च ॥ एकवचनान्तोपि ॥

पूर्वयक्ष । पु॰ जिनवि॰ । जलेन्द्रे । मणिभद्रे ॥

पूर्वरङ्ग । पु॰ नाट्यशालायाम् ॥ नाट्योपक्रमे । प्राक्सङ्गीते । गुणनिकायाम् ॥ रङ्गप्रधानाख्योरङ्गविघ्नशान्तिकारीनान्दीपाठगीतवादित्रादनेकाङ्गविशिष्टोनाट्यादौकर्त्तव्यः कर्म्मविशेष पूर्वरङ्ग । तदुक्तावसन्तराजीये । यन्नाट्यवस्तुन पूर्वरङ्ग विघ्नोपशान्तये । कुशीलवा प्रकुर्वन्तिपूर्वरङ्ग · प्रकीर्त्तित इति ॥ पूर्वरङ्ग विधायादौसूत्रधारेविनिर्गते । प्रविश्यतद्वदपर काव्यमास्थापयेन्नट ॥ प्रथमपूर्वरङ्गश्चतत . प्रस्तावनेतिच । चारम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ पूर्वरज्यतेऽस्मिन् । रञ्ज घञ् । कुत्वम् ॥

पूर्वराग । पुं॰ नायिकानायिकयोर्दशाविशेषे ॥ श्रवणाद्दर्शनाद्वापिमिथ सगूढरागयो । दशाविशेषो योऽप्राप्तौपूर्वराग सउच्यते ॥ इ॰ ॥

पूर्वरात्र . । पुं॰ रात्रे.पूर्वभागे ॥ राजाह्ना : पुंसि ॥

पूर्वरूपम् । न॰ पूर्वलक्षणे ॥ वैद्यके भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न॰ अनुमानविशेषे ॥ यथा । दृष्टस्वलक्षणसामान्यविषययत् · तत्पूर्ववदुच्यते । पूर्वप्रसिद्धमदृष्टस्वलक्षणसामान्यमितियावत् · तद्यस्यविषयस्त्वेनास्ति · अनुमानज्ञानस्येतिपूर्ववत् । यथाधूमाद्वह्नित्व-सामान्यविशेष . पर्वतेनुमीयते · तस्यवह्नित्वसामान्यस्यस्वलक्षणवह्निविशेषोदृष्टोऽस्त्यनल्याम् । वीतावीतभेदात्तद्द्विविधम् ॥

पूर्ववादी । त्रि॰ प्रागभियोक्तरि । प्रथमविवादिनि ॥

पूर्ववित् । त्रि॰ अतीतज्ञे ॥

पूर्वशैल . । पु॰ उदयपर्वते ॥

पूर्वसर । त्रि॰ अग्रगामिनि ॥

पूर्वा । स्त्री॰ पूर्वदिशि । प्राच्याम् ॥ तद्दिग्भववायुगुणा । पूर्वस्तुमधुरोवात स्निग्ध कटुरसान्वित । गुरुर्विदाहशमनोवातद · पित्त-नाशन · ॥ इति ॥

पूर्वाद्रि । पुं॰ उदयाचले । दिनमूर्द्ध-नि ॥

पूर्वाषाढा । स्त्री॰ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशतिसंख्याकनक्षत्रे ॥ तत्रजातस्यफलंयथा । भूयोभूय . सूयमानानुरक्तो भक्तोदेवेश्वमान्योतिदक्ष . । पूर्वाषाढाक-

न्मकालेयदिखादाषाढ स्याद्वैरि वर्गेनितान्तम्॥पूसावर्बाचाषाढाच॥

पूर्वाह्ण । पु॰ द्विधाविभक्तादिनस्य पूर्वभागे॥ यथा। आवर्तनात्पूर्वाह्णोस्यपराह्णस्तत पर । आवर्तनात्॰वासरस्यच्छायापरिवर्तना त्प्रागितिशेष . ॥ चिधाविभक्तादिनस्यप्रथमभागे॥ स्वचि शद्दण्डदिनमानेसूर्योदयावधिदशदण्डात्मक. काल यथा। पूर्वाह्णोवैदेवाना मध्य दिनमनुष्याणामपराह्ण पितॄणामितिश्रुति '॥ अह्न . पूर्वम् । पूर्वापराधरेत्येकदेशिसमास .। राजाह सखिभ्यजिष्टतिटच् । अ ह्लादेशोणत्वम्॥

पूर्वाह्णेतनम्। त्रि॰ पौर्वाह्णिके॥ पूर्वाह्णेभव । विभाषापूर्वाह्णा पराह्णाभ्याम्॰इतिट्युट्युलौतुट्च । घकालतनेष्विचलुक्॥

पूर्वेद्यु । अ॰ प्रात काले। धर्मवासरे॥ पूर्वस्मिन्नहनि॥ रुय पर दित्यादिनापूर्वशब्दादेद्युस्प्रत्ययो निपात्यते॥

पूष । पु॰ ब्रह्मदारुणि। तूत॰इ॰ भा॰॥ पूषवृक्षे। बृगुपधात्क॥

पूषक:। पु॰ ब्रह्मदारुणि॥ पूषएवक॥

पूषा। पु॰ सूर्ये॥ जगत पोषणात्। पुष्णाति। पुषपुष्टौ। श्वन्नु- घन्पूषन्निति निपातित।

पूषभाषा। स्त्री॰ अमरावत्याम्। इन्द्रनगर्याम्। सुरपुर्याम्॥

पूषसुहृत्। पु॰ शिवे॥

पूषा। स्त्री॰ पिङ्गलापृष्ठवर्त्तिन्यानाड्याम्॥ पूषातुपिङ्गलापृष्ठे नीलजीमूतसन्निभा। याम्यभागस्यनेत्रान्तायावत्पादतलगता॥

पृक्का। स्त्री॰ मरुन्मालायाम्। पिशुनायामोषधौ। असारक॰इ॰भा॰ । पिर्डि॰इ॰गौ॰भा॰स्पृश्यते।स्पृशस्पर्शने। बा॰ क्वन्। पृ॰॥

पृक्तम्। न॰ धने॥ त्रि॰ स्पृष्टे॥ सम्पर्कयुक्ते॥ पृच्यते। पृची॰। क्त॥

पृक्ति । स्त्री॰ सम्पर्के। स्पृष्टौ। स्पर्शे॥ पर्चनम्। पृचीसम्पर्के। क्तिन्॥

पृच्छा। स्त्री॰ अनुयोगे। प्रश्ने॥प्रच्छनम्। प्रच्छज्ञीप्सायाम्। गुरोश्चह लत्वात्। सम्प्रसारणम्॥

पृच्छितनु . । पुं॰ प्रश्नलग्ने॥

पृच्छ्यम्। त्रि॰ प्रष्टव्ये॥

पृतना। स्त्री॰ सेनामात्रे॥ सेनाविशेषे। तिसृषुवाहिनीषु॥ अत्रेभा॥ २४३। रथा २४३। अश्वा ७२९। पादातिका १२१५। समस्तसङ्ख्ययाखचितुर्विंशतिभि स्मृता। २४३॰॥ प्रियते। पृड्व्या-

रैव । सञ्ज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने । पर्थयति॰पथ्यं तेवा । पृथुप्रक्षेपे । चु॰ । अर्भकपृथुकेति पृथेर्वाकुकन्॰प्रथे सम्प्रसारणञ्च ॥ यद्वा । पृथुकायति । कै शब्दे । आतङ्कतिक ॥ त्रि॰ शिशौ । अर्भके ॥

पृथुका । स्त्री॰ हिङ्गुपत्र्याम् ॥ बालिकायाम् ॥

पृथुकोल । पु॰ राजबदरे ॥

पृथुच्छद । पु॰ हरिदर्भे ॥ त्रि॰ बृहत्पत्रे ॥

पृथुपत्र । पु॰ रक्तलशुने ॥ हरिदर्भे ॥

पृथुपलाशिका । स्त्री॰ शट्याम् ॥

पृथुरोमा । पु॰ मत्स्ये ॥ पृथूनिम हान्तिरोमाण्यस्य । रोमशब्देनप क्षोच्यतेतिस्वामी । बल्कलमितिसर्वधर ॥ त्रि॰ बृहल्लोमयुक्ते ॥

पृथुल । त्रि॰ विशाले ॥ पृथुपृथुत्वमस्यास्ति । सि॰लच् ॥ पृथु पृथुत्वलातिवा । क ॥

पृथुला । स्त्री॰ हिङ्गुपत्र्याम् ॥ टाप्

पृथुशिम्ब । पुं॰ श्योनाकप्रभेदे ॥

पृथुशेखर । पु॰ पर्वते ॥ पृथुर्महा नृशेखरोऽस्य ॥

पृथुसेन । पु॰ राज्ञि ॥ पृथ्वीसेना यस्य ॥

पृथुस्कन्ध । पु॰ शूकरे ॥

पृथूदकम् । न॰ तीर्थविशेषे प

पृथूदर । पुं॰ मेषे ॥ त्रि॰ बृहत्कुक्षौ ॥

पृथ्वी । स्त्री॰ भूमौ । अचलायाम् । धरायाम् ॥ स॥ त्वहत्याम्कृपल्याम् हिङ्गु॥त्र्याम् ॥ कृष्णजीरके ॥ ब्रह्मा र्डमातरि ॥ बृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे॰ प्रख्यानेवा । प्रथिम्रदिभ्रस्जासम्प्रसारणमितिकु । वोतोगुणवचनादितिङीष् ॥ वर्णवृत्तविशेषे । तल्लक्षण यथा । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति ॥ अपिच । पयोधरयुतास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरुचिकङ्कणाललितभावबन्नूपुरा । सुवर्णरुचिरालसत्कुवलयाद्भवत्कुण्डलाभुजङ्गपतिवर्णिताहरतिहन्तपृथ्वीमम ॥ यथा । चताधरतटीघनस्तसितमङ्गरागव्ययोद्दशो रपिचशोणिमाभवतिकारणादन्यत । द्रुतवपरप्रियानिभृतसङ्गमव्यञ्जकमुखेयदिदमञ्जनरहसिचार्द्धचन्द्र गले ॥

पृथ्वीका । स्त्री॰बृहदेलायाम् ॥ कृष्ण जीरके ॥ कलाजाज्याम् ॥ हिङ्गुप त्र्याम् ॥ प्रथते । प्रथप्रख्याने । फर्फरीकादयश्चेतिसाधु ॥

पृथ्वीकुरबक । पुं॰ श्वेतमन्दारे ॥

पृथ्वीजम् । न॰ गडलवणे ॥

पृदाकु । पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्दते । पर्द० । पर्देर्निंत्संप्रसारणमल्लोपश्चेतिकाकुप्रत्ययः ॥

पृश्नि । स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यतेवा । स्पृशसंस्पर्शे । घृणिपृश्नीतिसाधुः ॥ पृच्छति०पृच्छ्यतेवा । पर्षति०पृष्यतेवा । प्रच्छज्ञीप्सायाम् । पृषुसेचने वा । पूर्ववत्साधुः ॥

पृश्निका । स्त्री० कुम्भिकायाम् ॥

पृश्निगर्भ । पु० गदाग्रजे । श्रीकृष्णे ॥

पृश्निपर्णी । स्त्री० पृथक्पर्ण्याम् । अङ्घ्रिवल्लिकायाम् । चक्रोत्० हि० पिठवनि० हि० च० भा० । चाकुलिया० हि० गौ० भा० ॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा । हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमी ॥ पृश्निरल्प पर्णमस्याः । पाककर्णेतिङीष् ॥

पृश्निभद्र । पु० श्रीकृष्णे ॥

पृश्निशृङ्ग । पुं० विष्णौ ॥ गणेशे ॥

पृश्नी । स्त्री० वारिपर्ण्याम् ॥

पृषत् । पु० मृगे ॥ न० बिन्दौ ॥ त्रि० श्वेतबिन्दुयुक्ते ॥ पर्षति । पृषुसेचने । वर्त्तमानेपृषद्बृहन्महदिति अतिप्रत्ययेगुणाभावश्चनिपात्यते । शतृवदस्यकार्यम् ॥

पृषत । पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किञ्चिदल्पकः ॥ पृषतस्तुभवेत्स्वादुर्ग्राहकः शीतलोलघुः । दीपनोरोचनः श्वासज्वरदोषत्रयास्रजित् ॥ स्रुति ॥ बिन्दौ ॥ त्रि० श्वेतबिन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यांकिदित्यतच् ॥ यथा । पृषता बिन्दवः सन्त्यस्य । अर्शआद्यच् ॥

पृषताम्पति । पुं० वायौ ॥

पृषताश्व । पु० वायौ । अनिले ॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य ॥

पृषती । स्त्री० मृग्याम् ॥

पृषत्क । पु० वाणे । शरे ॥ पर्षति पृषु० । लट शतृ । सञ्ज्ञापूर्वकत्वान्नगुणः ॥ यद्वा । वर्त्तमाने पृषन्महदितिसाधुः । स्वार्थेकन् ॥

पृषदश्व । पु० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य ॥ पृषतामम्बुकणानामश्वइवेतिवा ॥

पृषदाज्यम् । न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्चतदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥

पृषद्बल । पुं० वायुभ्वे ॥

पृषन्ति । पु० बिन्दौ ॥ यथा । पय. पृषन्तिभिः स्पृष्टानातिवाताः शनैः शनैरितिजाम्बवतीविजयकाव्यम् ॥

पृषभाषा । स्त्री० इन्द्रपुर्याम् ॥

पृषाकरा । स्त्री० क्षुद्राश्मनि । वट खराद्र०भा० ॥

पृषातकम् । न० सदध्याज्ये ॥

पृष्टम् । न० सामगानामाध्यन्दिन सवनेगीयमानस्तोत्राणानामधेये ॥ त्रि० कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छे क्त ॥

पृष्टव्य । त्रि० जिज्ञासिते ॥

पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्व स्थाने । पीठ०द्र०भा० ॥ अस्यशु भाशुभलक्षणयथा । सुस्निग्ध मास लपृष्ठमभग्नस्वाप्यरोमशम् । सध मानांविपर्यस्त निर्द्धनानाप्रकीर्त्ति तमितिसमुद्र ॥ चरममात्रे ॥ पृष्यते । पृषु० । तिथपृष्ठगूथेति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्० चि चाधिकरणे० पृष्ठे. स्तुवतइत्यादो तथानिर्णयात् ॥

पृष्ठग्रन्थि । पुं० गडौ । कूब० द्र० भा० ॥

पृष्ठत । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठइति । आद्यादित्वात्तसि ॥

पृष्ठदृष्टि । पु० भल्लूके ॥

पृष्ठमासाद । त्रि० परोक्षे दोषाभि धायिनि ॥ वाक्याभिधायिनि ॥ द्र० त्रिकाण्डशेष ॥

पृष्ठमांसादनम् । न० परोक्षे दोषकी र्त्तने ॥ त्रि० तद्वति ॥

पृष्ठवंश । पु० रीढके । पृष्ठास्थि नि ॥ सतुगर्भेमासमात्रेणभवति ॥

पृष्ठवह । पु० पृष्ठ्याश्वे ॥

पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥

पृष्ठवाट्०ह् । पु० युगपार्श्वगवृषे । पष्ठवाहिनि ॥

पृष्ठवाह । पु०<br>पृष्ठवाहक । पु० } वृषे ॥

पृष्ठवाह्य । पु० भारवाहकवृषे । स्त्रीरियि । पृष्ठि ॥

पृष्ठशृङ्ग । पु० वनच्छागे ॥

पृष्ठशृङ्गी । पु० शभीरौ । सैरिभे ॥ शंढ । भीमसेने । वृकोदरे ॥

पृष्ठशायन । पुं० धान्यविशेषे ॥ मत कुजे ॥

पृष्ठी । पुं० मत्स्यविशेषे ॥

पृष्ठोदय । पुं० राशिविशेषे ॥ मेषो- वृषकर्कटधनुर्मकरश्च । पृष्ठो- दया । षडेवेसमीनेश्चापितथैवच ॥

पृष्ठ्य । पुं० स्त्रीरियि । पृष्ठेनभारवह नशीलेघोटके । न० पृष्ठछन्दे ॥ य- ज्ञविषयेऽटे । स्मरन्ति ॥ पृष्ठानास मूह । पृष्ठ्यम् ॥ प्रशस्तमतिश यितपृष्ठमस्य । अर्श्यआदीतियद्वा

पृष्णि । पुं० सूर्यं ॥

पृश्निका स्त्री० कंतृणी । कुम्भ्या

पृष्णी । ...

मेचक । पु० कृष्णे ॥ कायसकान्तो । कौशिके ॥ धूके ॥ गजलाङ्गूल मूले । तज्जतीक्ष्णद्रव्यनामानसिकाण्डवि

प्रेषे ॥ पचति॰पच्यतेवा॰ दुवल्के न । डुपचष् ॰ ॥ पचिमच्योरिच्चो- पधायाइतिवुन् । अतइत्त्वम् । पु गन्ते तिगुण पर्यङ्के ॰ मेषे॰ । यूके ॥

पेचकी । पु॰ हस्तिनि ॥

पेचिल । पु॰ गजे । हस्तिनि ॥

पेचु । न॰ पेचुल्याम् ॥

पेचुकम् । न॰ नाडीचशाके। पेचुल्या म् ॥ चिकाराडशेषेकेचुकमितिपाठ

पेचुली । स्त्री॰ पेचुनि । नाडीचशाके

पेट । पु॰ प्रहस्ते । पेटति । पिट॰ । प॰ अच् ॥

पेटक । पु॰ न॰ पिटके । पुस्तका दीनामञ्जूषायाम् । पिटार॰ इ॰ भा॰ ॥ त्रि॰ कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयो । ण्वुल् ॥

पेटाक । पु॰ पेडायाम् । पेटके ॥

पेटिका । स्त्री॰ छत्रविशेषे॰ । कुबेरा च्याम् । कथाहन्तिकायाम् ॥

पेटी । त्रि॰ पेटके ॥

पेडा । स्त्री॰ पेटके । मञ्जूषायाम् । वृहत्पेटाके ॥ पिण्डते । पिडिस- घाते । प॰ अच् । अनित्यत्वान्नुम् ॥

पेत्वम् । न॰ अमृते ॥ घृते ॥ पीयते । पा॰ । अन्येभ्योपिदृश्यतइति॰ त्वन् ॥

पेपीयमान । त्रि॰ अत्यासक्त्यापीय माने ॥

पेयम् । न॰ पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नवि॰। यथा। भोज्यपेयतथाचूष्यलेह्यखाद्यच चर्व्यकम् । निष्पेयञ्चैवभक्ष्यं स्याद- न्नमष्टविधस्मृतम् ॥ इ॰ हा॰ लि॰ ॥ त्रि॰ पानयोग्यद्रव्ये । पातव्ये ॥ पातुयोग्यम् । पा॰ । यत् । ईद्यति । गुण ॥

पेया । स्त्री॰ यवागवाम् ॥ अन्नमण्ड ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेया विभिर्गुणाख्या । चतुर्दशगुणीनीरैरन्न शाल्यादिभि : कृता । द्रवाधिका- स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरै ॥ साविलघ्वीग्राहिणीचधातुपुष्टिविधा यिनी ॥ स्वेदाग्निजननीक्षियावातन- वर्चोनुलोमिनी । शुण्ठीसैन्धवसंयु क्तादीपनीपाचनीचसा ॥ आमशूल हरीकुच्याक्षादिमन्थविनाशिनी ॥ पातुयोग्या । पा॰ । यत् । ईद्गुणौ । टाप् ॥

पेयूष । पु॰ न॰ अमृते ॥ नवदु- ग्धे । सप्तदिवसावधिक्षीरे ॥ आस न्नप्रसवायाः क्षीरपेयूषउच्यते ॥ पीय ते॰पीयतेऽनेनवा । पीयइतिसौ त्रोधातु॰प्रीतौ । पीयेरूषन् । बहु लवचनात्पक्षेगुण ॥ अग्निसंयो- गात्कठिनतागतेनवप्रसूतायागो क्षीरे ॥ क्षीरंतत्कालसूतायाघन

पियूषमुच्यते ॥ नव्यक्षुते ॥

पेरु । पुं० सूर्ये ।। वह्नौ ॥ समुद्रे ॥ पीयते । पीङ्पाने । निपीभ्या रु ॥

पेरोजम् । न० उपरत्नवि० । पेरजै । पिरोजा० इ० भा० ॥ तद्गुणविधम् । भस्माङ्गहरितञ्च । तत्तगुणा । पिरोजसुकषायस्वान्मधुरद्दीपर्मपरम् । स्थावरजगमश्चैवसयोगाच्चयथाविषम् ॥ तत्सर्वनाशयेच्छीघ्र शूलभूतादिदोषजम् । पाठान्तरम् यथा ॥ पेरोजसुकषायस्वान्मधुरदीपनद्दयो । स्थावरादिविषघ्न स्याद्धरितश्चापरभृश ॥ शीताङ्गनाशयेच्छीघ्र शूलतिमिरभूतजम् ॥ इ० रा० नि० ॥

पेलम् । न० अण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अत्रसावका शत्व प्रकार ॥ पेलनम् । पिलभेदने । घञ् । पेलोस्यास्ति । अन्यभ्योपीतिव । ॥ कोमले कृशे ॥

पेवलि । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्य द्विविधनृत्यमुच्यते । पेवलिर्वहुरूपाचताण्ड० द्विविधमतम् ॥ अङ्गविक्षेपवाहुल्य तथाभिनयशून्यता । यत्रसापेवलिस्तस्या सञ्ज्ञादेशीतिलोकत ॥ छेदनभेदनयत्रवहुरूपासुखावली ॥ ताण्डवबहुरूपन्तज्ञात्वागलमुजत मिति ॥

पेशलम् । न० सौकुमार्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भावेघञ् । पेशलाति । ला० । क ॥ वा० पिशेरलञ्वा ॥ पेशोस्यास्ति । सिध्मादित्वालच्वा ॥ धूर्त्ते ॥ कर्मणामनसावाचावपुषाचशोभनत्वात् ० पेशलोविष्णुर्वासुदेव ॥ तथाविधोन्योपि ॥

पेश । न० रूपे ॥

पेशस्कृत् । पुं० हस्ते ॥ कीटवि० । किमिरकी० इ० गौ० भा० ॥

पेशि । पुं० शतकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिशिअवयवे । इपिशिरु हिवतीत्यादिना० इन् ॥ मासविद्ले ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मास्याम् ॥ अण्डभेदे ॥ कृदिकारादक्तिन इतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष । पुं० पक्षिडिम्बे । अण्डे ॥ पेशीनामासखण्डाना कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लृसचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० } पेषणशिलायाम् ।
पेषणी : । } दृषदुपलात्मि-

कायाम् । पद्दे । व्युष्ट्याच्छपे । सि ल० द्रु० भा० ॥

पैत्रश . । त्रि० पैत्रशे ॥

पैत्राक्ष । पु० पैत्रश्याम् ॥

पैशुष । पु० कर्णे ॥

पैठर : । त्रि० उख्ये । स्थालीपक्कमासादौ ॥ पिठरेसंस्कृतम् । संस्कृतभक्षादुत्यण् ॥

पैठीनसि . । पुं० स्मृतिकारकेमुनिविशेषे ॥

पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥

पैतामहम् । त्रि० पित्र्ये । पितामहसम्बन्धिधनादौ ॥ पितामहस्येदम् । तस्येदमित्यण् ॥ स्त्रियांपैतामही

पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ ॥ सुखेनस्थीयतेयत्रसदेश खलुपैतृक ॥ पितुरागतम् । पितुर्यच्चेतिचकाराट्ठञ् ॥ ङीपि० पैतृकीविद्या ॥

पैतृकभूमि स्त्री० । पितृसम्बन्धिस्थाने ॥

पैतृष्वसेय । त्रि० पितुर्भगिन्योसन्तती ॥ पितृष्वसुरपत्यम् । ढकिलोप । अतएवज्ञापकाड्डक् ॥ स्त्रियांपैतृष्वसेयी ॥

पैतृष्वस्रीय । त्रि० पितुर्भागिनेये । पैतृष्वसेये ॥ पितृष्वसुरपत्यम् । पितृष्वसुश्छण् ॥

पैत्त : । त्रि० पैत्तिके ॥

पैत्तिकम् । त्रि० पित्तजव्याधौ । पित्तसम्भवे ॥ पित्तस्यशमनकोपनवा वातपित्तश्लेष्मभ्य शमनकोपनयोरितिठञ् ॥

पैत्रम् । न० पितृतीर्थे । तर्जन्यङ्गुष्ठयोर्मध्ये ॥ पितृणामिदम् । तस्येदमित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥

पैत्राहोरात्र . । पुं० पितृलोकस्यदिवारात्रौ । नृणांमासि ॥ कृष्णपक्षपितॄणांदिनम्०शुक्लपक्षोरात्रि । पितॄणामयम्०पैत्र : । पैत्रश्चासावहोरात्रश्च ॥

पैत्र्य । पु० देवसर्गप्रभेदे ॥

पैप्पलम् । त्रि० पिप्पलकाष्ठे ॥ पिप्पलभस्मनि ॥ पिप्पलस्यावयवोविकारोवा । अवयवेचेत्यण् ॥

पैल । पुं० ऋषिविशेषे । ऋग्वेदधारकेव्यासशिष्ये ॥ पीलायाअपत्यम् । पीलायावेत्यण् ॥

पैलेय । पु० पैले ॥ पीलायाअपत्यम् । अणभावे० द्व्यच इति० ढक् ॥

पैशाच । पु० अष्टप्रकारविवाहान्तर्गताष्टमेविवाहे ॥ पैशाच . कन्यकाकुलात् । छलमाहमनु । सुप्तामत्ताप्रमत्तांवारहोयत्रोपगच्छति । सपापिष्ठोविवाहानांपैशाचश्चाष्टमोधम ॥ पिशाचस्येवायम् । अण् ॥ पिशाचएववा । स्वार्थिक . प्रज्ञाद्यण् ॥ देवसर्गविशेषे ॥ त्रि० पिशाचसम्बन्धिन ॥

पैशाचिक . । त्रि० पिशाचसम्बन्धिनि ॥

पैशुनम् । न० परस्मै परोक्षपरदोषप्रकाशने ॥ पिशुनस्यकर्मभावोवा । युं० । अण्० ॥

पैशुन्यम् । न० अविज्ञातदोषाविष्करणे । पिशुनतायाम् । खलतायाम् ॥ पिशुनस्यदुर्ज्जनस्यकर्मभावोवा । ब्रा० ष्यञ् ॥ परोक्षेपरदूषणकथने ॥ गुरुनृपतिबन्धु भ्रातृमित्रसकाशेस्वार्थोपघातार्थंदोषोपाख्यानं पैशुन्यमितिवदन्ति ॥

पैष्ट । त्रि० पिष्टसम्बन्धिनि ॥

पैष्टिकम् । न० मद्यविशेषे ॥ पिष्टानां समूहे ॥

पैष्टी । स्त्री० विविधधान्यविकारजायासदिरायाम् । वारुण्याम् ॥ पैष्टीकटूष्णतीक्ष्णास्यादीषद्गौडीसमा परा । वातहृत्कफहृत्त्वीषत्पित्तहृन्मोहनीचसा ॥ पिष्टस्येयम् । तस्येदमित्यण् । ङीप्

पोगण्ड । पुं० बालके ॥ बाल्याशो डशाद्वर्षात्पोगण्डश्चापिशब्दित इतिनारद ॥ दशवर्षीयवालके । त्रि० विकलाङ्गे ॥ पवते॰पुनाति वा । विच् । पोर्गण्डएकदेशोस्य ॥

पोट : । पुं० वेस्मभूमौ । वास्तौ ॥

पोटगल. । पुं०नले । नरकट॰नरसल॰ इ० भा० ॥ काशे । इक्षुगन्धायाम् । काँस० इ० भा० ॥ मत्स्यविशेषे ॥ पोटेनसंश्लेषेणगलति । गलस्रवणे॰स्रवणेच । अच् ॥

पोटा । स्त्री० स्त्रीपुंसलक्षणायाम् । स्त्रीपुंसयो स्तनश्मश्रु दि चिह्नयुक्तायाम्योषिति ॥ पोटयति । पुट भाषार्थंस्युरादि । पचाद्यच् ॥ दास्याम् ॥

पोट्टली । स्त्री० पोट्टलिकायाम् ॥ पोटली० इ० भा० ॥ यथा । शुद्ध्यर्थं त्रिफलाक्काथेगुड्च्या : क्काथएववा । दोलायन्त्रेपुर . पाच्य : पोट्टल्या वस्त्रबद्धया ॥

पोडु । पुं० कपालास्थितले ॥

पोत । पुं शिशौ ॥ वस्त्रे । समुद्रतरणार्थेनौकाविशेषे । समुद्रयाने । वार्वटे । अर्णोत्रा० जहाज० इ० आधुनिकभाषा ॥ यथा । समुद्रया नैरत्नानिमहामौल्यानिसाधुभि । रत्नपारीक्षकै सार्द्धमानयिष्ये बहूनिच ॥ शुकेनसहसप्राप्तोमहान्तं लवणार्णवम् । पोतारूढास्तत सर्वे पोतवाहैरुपाश्रिता . ॥ अपारेदुस्तरेऽगाधेयातिवेगेननिश्चय । इ० वाराहेगोकर्णमाहात्म्याध्याय ॥ पोतोदुस्तरवारिराशितरणेदीपोन्धकारागमे इत्यादि ॥ गृहस्थाने । पोता०इ० गौ० भा० ॥ बालस्त्रि० ॥ दशवर्षीयगजे ॥ पुनाति॰पूयते

रथे ॥

पोली । स्त्री० पिष्टकवि० । पूपाख्या म. । चपंट्याम् ॥

पोष । पुं० पोषणे ॥

पोषक । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ ॥ पुषपुष्टौ ॥ ल्युट् ॥ भृतौ ॥

पोषयित्नु : । पु० कोकिले ॥ भर्त्तरि ॥ स्त्रियां ॥ त्रि० पोषके । पोषणकर्त्तरि ॥ पोषयति । पुष० । स्तनि हृषिपुषीत्यादिना० इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० ह० गौ० भा० ॥ त्रि० पोषणकर्त्तरि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृवर । त्रि० पोषकश्रेष्ठे ॥

पोष्य । त्रि० प्रतिपाल्ये । पोषणीये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पु० पुत्रप्रतिनिधौपालनासुतत्व प्राप्ते ॥

पोष्यवर्ग । पुं० परिजने । प्रतिपालनीयगणे ॥ यथा मातापितागुरु पत्नीत्वपत्यानिसमाश्रिता । अभ्यागतोऽतिथिश्चाग्नि . पोष्यवर्गाच-मीनव ॥

अपिच । मातापितागुरुर्भ्राताप्रजा दीना , समाश्रिता । अभ्यागतोतिथिश्चाग्नि पोष्यवर्गउदाहृत . ॥ भरणपोष्यवर्गस्य प्रशस्त स्वर्गसाधनम् । नरकपीडनेचास्यतस्माद्यत्नेन तभरेत् ॥ पोष्याणावर्ग ॥

पौंसवनम् । न० पुंसवनसस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यानञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियांपौंस्नी ॥

पौगण्डम् । न० पञ्चाब्दान्तरदशाब्दपर्य्यन्तायामवस्थायाम् ॥ यथा । कौमारपञ्चमाब्दान्तपौगण्डदशमावधि । कैशोरमापञ्चदशात्यौवनन्तुतत परमिति ॥ आचार्यप्रमुखानाञ्चपौग पौन्थे मतेर्मतौ । यतो गण्डावस्थतेनपौगण्ड । सस्मृतोबुधैरित्युक्तेस्तदवस्थावति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पुण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलपद्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तकषायशुक्रलहिमम् । चक्षुष्यं मधुरपाकीवर्ण्यं पित्तकफास्त्रनुत् ॥

पौण्ड्र । पु० चदेली० ह० प्र० देशे ॥ भीमसेनस्यसङ्ख्ये ॥ पौंडा० ह० प्र० इक्षुविशेषे ॥ पुण्ड्राते । पुडिखण्डने । स्फायीतिरक् । प्र-ज्ञाद्यण् ॥

पौण्ड्रक । पुं० श्वेतपौंडा० ह०प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोर-सपाकयो : । सुशीतोवृंहणीवल्य पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

इविश्रादौचचिये यथाहित्तिक्रिया लोपादिनाशुद्धत्वमापन्ने दसुपदवाच्ये आत्मन्तरे ॥ पौण्डिकायामवे-ष्याज्जातेजातिवि० । पुडी० इ० गौ० भा० ॥ पुत्रएव । स्वा० कन् ॥

पौराङ्ग्वद्धन । पु० देशवि० । विशा र० इ० भा० ॥

पौण्ड्रक : । पुं० पुण्ड्रेत्तौ । सेव्ये । अतिरसे ॥

पौतिमाष्य । पुं० वेदप्रसिद्धेऋषिविशेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णेमधुनि ॥ या कृष्णामशकोपमालघुतरा ' प्रायोमहापिण्डिकावध्नानास्तरुकोटरा-न्तर्गता . पुष्पासवकुर्वते । तास्तज्ज्ञैरिहपुत्तिकाभिगदितस्ताभि कृत सर्पिषातुल्य यन्मधुतद्वनेचरजने ' सकीर्तितपौत्तिकम् ॥ पौत्तिकमधु रूक्षोष्ण पित्तदाहास्रवातकृत् । विदाहिमेहकृच्छ्घ्न ग्रन्थ्यादिक्षतशोषिषु ॥ पुत्तिकाभि कृतम् । सञ्ज्ञायामित्यण् ॥

पौत्र । पुं० पुत्रस्यपुत्रे । नप्तरि । पोता० इ० नाती इ० भा० ॥ पुत्रस्य०पुत्र्याश्चापत्यम् । अनृष्यानन्तर्येविदादिभ्योऽञ् ॥ न० पोतुर्भावकर्मणो . ॥ उद्र० अञ् ॥

पौत्रिकेय । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्याम् ॥ पुत्रस्यपुत्र्याश्चस्त्र्यपत्यम् । अञन्तत्वान्ङीप् ॥

पौन . । पुनिक त्रि० पुन पुनर्भवे ॥ कालाट्ठञ् ॥

पौन पुन्यम् । न० आभीक्ष्ण्ये । पुन पुनरित्यस्मिन्नर्थे ॥ पुन पुनरित्यस्यभाव । ष्यञ् । अव्ययानाभमात्रेटिलोपस्य०प्रातिपदिकाद्यर्थ उपसङ्ख्यानमितिटिलोप ॥

पौनरुक्तिक । पु० पुनरुक्तमधीयाने ॥ उ० ठक् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव । पु० द्वादशविधपुत्रान्तर्गतपुत्रवि० । पुनर्भूपुत्रे ॥ अपत्येर्थेऽण् ॥ यापत्यावापरित्यक्ताविधवावास्वयेच्छया । उत्पादयेत्पुनर्भूत्वासपौनर्भवउच्यते ॥

पौरम् । न० कतृणे । रौहिषतृणे । रामकर्पूर० इ० ख्याते॥ त्रि० नागरे । पुरोद्भूते ॥ पुरेभवम् । तत्रभवद्रत्यण् ॥

पौरक . । पुं० गृहवाह्योपवने ॥ निष्कुटस्तुगृहारामोवाह्यारामस्तुपौरक ' ॥ इतिहेमचन्द्र ॥

पौरन्दर . । पु० पुरन्दरापत्ये॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव ' । पु० दुष्मन्तनृपतौ ॥ पुरोरप

। सएवपौरोडाश ।
ानस्तम्भवोवा । पौरो-
ाशात्ष्ठन् ॥
। न० पुरोभागिन क-
ष्यञ् ॥
। न० पुरोहितस्यकर्म-
। पत्यन्तपुरोहितादिभ्यो

पु० पौर्णमास्याक्रियमा
ष्टि ॥ पौर्णमास्याभव ।
वृतुनक्षत्रेभ्योण् ॥
स्त्री० पूर्णिमायाम् ॥
ायस्याम्। बहुव्रीहौकृते०
सास्मिन्पौर्णमासीति-
॥ यद्वा । पूर्णमासोऽ
इति । पूर्णमासादण्-
इत्यण् । ङीप् ॥
। त्रि० पूर्वदेहभवे ॥
। त्रि० पूर्वपदग्राहिणि।
णाति । पदोत्तरपदग्र
ठक् ॥
कार्यकारणभावे ॥ सा
ावे ॥
त्रि० पूर्वाह्णभव ।
र्वाह्णापराह्णाभ्यामिति
।
पु० कुवेरे॥ रावणे
णे ॥ पुलस्तेर्गोत्रापत्य
ादिभ्योयञ् ॥ बहुत्वे

पुलस्त्य ॥ राक्षसे ॥
पौलि । पु० आपक्वे । भर्जितेइरित
यवादौ ॥ पोलति । पुलमहत्त्वे ।
ज्वलादित्वाण । पौलिननिर्वृत्त
। सुतङ्गमादित्वादिञ् ॥
पौलुषि. । पुं० सत्ययज्ञे ॥ पुलुष
स्यापत्यम् । इञ् ॥
पौलोमी । स्त्री० इन्द्राण्याम् ॥ पुलो
म्नोमुनेरपत्यं स्त्री । तस्यापत्यमि
त्यण । गोत्रत्वेनजातित्वान्ङीष्॥
पौष । पु० तैषे । सहस्ये । हैमने
। तत्रजातफलम् । निगूढमन्त्र
सुकृषाङ्गयष्टि परोपकारीपिष्टवि
रहीन । कष्टान्वितार्थं व्ययकृद्वि
धिज्ञ . पौष प्रसूत : पुरुष :
सुधीर ॥ पौषीपौर्णमास्यस्मिन्
। सास्मिन्पौर्णमासीत्यण् ॥ न०
मह्रे ॥ युगे पुष्ययुक्तेऽह्नि ॥
पौषी । स्त्री० पुष्ययुक्त पौर्णमास्याम्
॥ पुष्येणयुक्तापौर्णमासी । नक्षत्रे
णयुक्त कालइत्यण् तिष्यपुष्य
योर्नक्षत्राणियलोप । ङीप् ॥
पुष्येणयुक्तायांरात्रौ ॥
पौष्करम् । न० पुष्करमूले ॥ पौष्क
रकटुक तिक्तमुष्ण वातकफज्वरान्
। हन्तिशोथ.रुचिश्वासान्विशेषात्
पार्श्वशूलनुत् ॥
पौष्करिणी । स्त्री० पुष्करिण्याम् ॥
पौष्टिकम् । न० पुष्ट्युत्पादककर्मणि

॥ चौरसमयेनाच्छादनवस्त्रविशेषे । काबाइ॰ इ॰ गौ॰ भा॰ ॥
पौष्ण । पु॰ सूर्य्यपुत्रे ॥ न॰ रेवती नक्षत्रे ॥
पौष्पयम् । वि॰ पुष्पनिर्मिते ॥
पौष्कम् । न॰ धातुप्रभेदे । रीतिपुष्पे ॥ पुष्पस्यप्रतिकृति । इवे प्रतिकृताविति कन् । तत स्वार्थे॰ अण् ॥
पौष्पी । स्त्री॰ पुष्पपुरे । पटना॰ इ॰ भा॰ ॥
प्याट् अ॰ हे । भो । सम्बोधने ॥ प्यायते । प्यैङ्वृद्धौ टप्रत्यय
प्र । अ॰ प्रकर्षे ॥ गतार्थे ॥ प्रथमादिकर्मदीर्घशोभृशसम्भवतृप्तिषु । वियोगशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ यथा आदिकर्म्मणि॰ प्रयात । दीर्घे॰ प्रबलासूषका । ईर्षे॰ प्रभुदेशस्य । भृशार्थे प्रवर्द्धितादाथादा । । सम्भवे॰ हिमवतोगङ्गाप्रभवति । तृप्तौ॰ प्रभुक्तमन्नम् । वियोगे॰ प्रोषित । शुद्धौ प्रसन्नमुदकम् । शक्तौ॰ प्रशक्तोविप्राय । इच्छायाम्॰ प्रार्थयते कन्याम् । शान्तौ॰ प्रशान्तोग्नि । पूजायाम्॰ प्राञ्जलि स्थित । अग्रे॰ प्रवालम् । दर्शने प्रलोकयति । इत्यर्थ ॥
प्रकाट । वि॰ व्यक्ते । नि सन्दिग्धे भातीतिव्यवहारगोचरे । स्पष्टे ॥ उद्भूते ॥ सम्प्रोदश्चेतिप्रशब्दात् स्वार्थेकटच् प्रत्यय ॥
प्रकटित । वि॰ प्रकाशिते ॥
प्रकटोदितम् । न॰ विस्पष्टवाक्ये ॥
प्रकण्व । पु॰ देशविशेषे ॥
प्रकथनम् । न॰ प्रकर्षेणप्रतिपादने ॥ यथागाथा प्रकुरुते । प्रकथयतीत्यर्थ । गन्धनावक्षेपणेतिप्रकथने आत्मनेपदम् ॥
प्रकम्पन : । पु॰ वायौ ॥ नरकविशेषे ॥ न॰ कम्पातिशये ॥
प्रकर । पु॰ स इतौ । सङ्घे ॥ विकीर्णकुसुमादिषु । न॰ जोङ्के ॥ प्रकीर्यते कृविक्षेपे । ऋदोरप् ॥
प्रकरणम् । न॰ प्रस्तावे ॥ यथा । भोजनप्रकरणे सैन्धवमानयेतिलवणे प्रतीतिगमनप्रकरणे तत्वश्वे प्रतीतिर्भवतीति ॥ रूपकभेदे । अभिनेयप्रकारे ॥ विश्रामे ॥ ग्रन्थसन्धौ । ग्रन्थस्यविच्छेदे ॥ तदुक्तम् यथा । शास्त्रैकदेशसम्बन्ध शास्त्रकार्य्यान्तरेस्थितम् । आहु प्रकरणनामग्रन्थभेदविपश्चित : ॥ अत्र मीमांसका ॥ विनियोगविधेसहकारिभूते षुषट् सुप्रमाणेषुचतुर्थप्रमाणे ॥ उभयाकाङ्क्षाप्रकरणम् । यथा । प्रयाजादिषुसमिधोयजती

प्रकरणम्

स्यादिवाक्ये फलविशेषस्यानिर्देशात् समिद्यागेनभावयेदितिबोधानन्तरं किमित्यस्य प्रकार्याकाङ्क्षा। दर्शपूर्णमासवाक्ये पिदर्शपूर्णमासाभ्यांस्वर्गंभावयेदितिबोधानन्तरकथमित्यस्य प्रकारकाकाङ्क्षा। इत्थचोभयाकाङ्क्षयाप्रयाजादीनादर्शपूर्णमासाङ्गत्वम्। तच्चप्रकरणद्विविधम्। महाप्रकरणमवान्तरप्रकरणञ्चेति। तत्रमुख्यभावनासम्बन्धिप्रकरणमहाप्रकरणम्। तेनचप्रयाजादीनादर्शपूर्णमासाङ्गत्वम्। एतच्चप्रकृतावेवोभयाकाङ्क्षाया सम्भवात्। नतुविकृतौ। तत्रप्रकृतिवद्विकृतिः कर्त्तव्येत्यतिदेशेनकथम्भावाकाङ्क्षायाउपशमेनापूर्वाङ्गानामप्युभयाकाङ्क्षयाविनियोगासम्भवात्। तस्मादपूर्वाङ्गानाम्स्थानादेवविकृत्यर्थत्वमिति। अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम्। तेनचाभिक्रमणादीनाप्रयाजाद्यङ्गत्वम्। तच्चसन्दंशे नैवज्ञायते। तदभावेचाविशेषात्सर्वेषाफलभावनाकथम्भावेनग्रहणप्रसङ्गेनप्रधानाङ्गत्वापत्तेः। एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वंसन्दंश। यथा। अभिक्रमणे। तद्विसमानयतउपभृतस्तेजोवाज्यत्यादिनाप्रयाजानुवादेन। किञ्चिदङ्ग-

विधायविधीयते। तदनन्तरमपिप्रयाजानुवादेनप्रयाजत्वम्। यस्यैव विदुष प्रयाजाइज्यन्ते। प्रैभ्योलोकेभ्योभ्रातृव्यान्नुदते। अभिक्रामजुहोत्यभिजित्यै इतितदनन्तर मपिप्रयाजानुवादेनयोवैप्रजानामिथुनवेदेत्यादिनाकिञ्चिदङ्ग विधीयते। अत प्रयाजाङ्गमध्ये ऽभिहितमभिक्रमण तदङ्ग प्रयाजैरपूर्वंकृत्वायागोपकारभावयेदितिज्ञाते। कथमेभिरपूर्वंकर्त्तव्यमिति। कथम्भावाकाङ्क्षाया सत्वात्। साचसन्दंशपतितैरभि क्रमणादिभिः शाम्यति। नचाङ्गभावनायाकथम्भावाकाङ्क्षाभाव। भावनासाम्ये नतत्रापितत्सम्भवात्। यदिदप्रकरणं तत्क्रियायाएवसाक्षाद्विनियोजकद्रव्यगुणयोस्तुतद्द्वारा। तथाहि। यजेतस्वर्गंकामइत्यत्रफलभवनाया कथम्भावाकाङ्क्षाया. सन्निधपठितमश्रूयमाणफलकक्रिया- जातमुपकार्याकाङ्क्षयेतिकर्त्तव्यतात्वेनाऽन्वेति। (*) क्रियायाएवलोकेकथम्भावाकाङ्क्षायामन्वयदर्शनात्। नहिकुठारेणच्छिन्द्यादित्यत्रकथम्भावाकाङ्क्षायामनुच्चार्यमाणोपिहस्तोऽन्वेति। किन्तु हस्तेनो द्यम्यनिपात्येत्युद्यमननिपातनेनएव। हस्तस्तद्द्वारैवान्वेतीतिसार्वजनीनमेतत्। इदञ्चस्थाना

द्विभ्योबलवत् । अतएवाजेर्दीव्यति राजन्यमितिविदेवनादयोधर्माअभिषेचनीयसन्निधौपठिताअपितस्याना मतदङ्गम्॰किन्तुप्रकरणाद्राजसूयाङ्गमितिमीमांसका. ॥

प्रकरणसम । पुं॰ नैयायिकानापदार्थावान्तरविशेषे ॥ तल्लक्षयति । यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्ट. प्रकरणसम. ॥ ४७ ॥ सद्धेतुस्ससाध्यस्यपरसाध्याभावस्यवा॰निर्णयार्थमपदिष्ट प्रयुक्त प्रकरणसमउच्यते । सक ढ्ल्याकाङ्क्षया माह । यस्मात्प्रकरण पक्षप्रतिपक्षावितिभाष्यम् । साध्यतदभाववन्तावितितदर्थ । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्यंचनिर्णयजनयितुमशक्तस्तुल्यबलेनपरेणप्रतिबन्धात्॰किन्तु धर्मिणि साध्यवत्वतदभाववत्वम्वेति चिन्ताजिज्ञासाप्रवर्त्तयतिसप्रकरणसम । यद्वा प्रकृष्ठ कारणलिङ्ग परामर्शोवा॰कोहेतुरनयो साधक. ॰ एतयो क परामर्श प्रमेतिवा यत्रजिज्ञासाभवतीत्यर्थ । यस्मादित्यादितुवस्तुस्थितिमात्रम् । लक्षणन्तुतुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वस्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शी-वा । विरोधिपरामर्शस्यचहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन । अ-

न्यथाहेतोर्दुष्टत्व नस्यात् । अयञ्चदशाविशेषेदोषद्रूस्यत सर्वतोरपि विरोधिपरामर्शकालेदुष्टत्वमिष्टमेवेत्त्ववधेयम् ॥ ४७ ॥

प्रकरी । स्त्री॰ नाट्याङ्गे ॥ चत्त्वरभूमौ ॥

प्रकर्ष. । पु॰ विशेषे । अधिके ॥ उत्कर्षे ॥ यथा । गुणप्रकर्षेणजनोनुरज्यतेजनानुरागप्रभवाहिसम्पद ॥ प्रकर्षणम् । कृष॰ । घञ् ॥

प्रकाण्ड पु॰ न॰ विटपे ॥ तरोर्मूलशाखान्तरे । मूलादारभ्यशाखावधिवृक्षे । स्कन्धे ॥ त्रि॰ प्रशस्ते ॥ प्रगत काण्डोऽधमोयस्मात् । प्रशस्तोगौ गोप्रकाण्ड । प्रकाण्डस्यरूढिशब्दत्वात्प्रशसावचनैश्चेतिस समास ॥ प्रकाण्डते । कडिभेदने । चु॰ । एरच् । पृ॰ ॥ प्रकाम्यते । कमु॰णिङ् । वरण्डादयश्चेतिडोन्त ॥

प्रकाण्डर । पुं॰ द्रुमे ॥

प्रकामम् । अ॰ अतिशये ॥

प्रकामम् । त्रि॰ निकामे । यथेप्सिते ॥ प्रकमनम् । कमु॰ । घञ् ॥

प्रकार । पु॰ भेदे ॥ सामान्यस्यभेदकेविशेषे ॥ सादृश्ये ॥ प्रकरणम् । कृञोघञ् ॥

प्रकाश । पुं॰ द्योते । आतपे ॥ स्फुटे । प्रकटे । उल्वणे । व्यक्ते ॥ प्रहासे ॥ बुद्धिपरिणामविशेषेविषयाकारे॰दीपवत् । स्वविषयावरण

विरोधिनिसत्वकार्ये ॥ प्रभाते ॥ न० कास्ये ॥ त्रि० व्यक्ते । प्रकाशनम् प्रकाशतेवा । काशृदीप्तौ । घञ्० पचाद्यच्वा ॥ अतिप्रसिद्धे ॥

प्रकाशक । पु० सूर्यादिवदन्यावभासकेपरमात्मनि ॥ सूर्यादिषु ॥ त्रि० व्यञ्जके । अवभासके । प्रकाशकर्तरि ॥ प्रकाशयति । काशृ० । ण्वुल् ॥

प्रकाशकज्ञाता । पु० कुक्कुटे ॥ त्रि० प्रकाशज्ञातरि ॥

प्रकाशन । पु० प्रकाशके ॥ प्रकाशयति । काशृ०ल्यु ॥

प्रकाशमान । त्रि० भासमाने ॥ श्रिश्रोपलब्धात्मनासदाप्रकाशमानमेवब्रह्मेतियथा ॥

प्रकाशात्मा । पु० दिवाकरे । सूर्ये ॥ प्रकाशआत्मास्वरूपयस्य ॥ त्रि० व्यक्तस्वभावे ॥

प्रकाशित । त्रि० व्यक्तीकृते । दर्शिते । आविष्कृते । प्रकटिते । सञ्जातप्रकाशे ॥ ता० इतच् ॥

प्रकाश्यो । त्रि० दीप्तिजनके ॥

प्रकीर्णः । पु० पूतिकरञ्जे ॥ न० ग्रन्थविच्छेदे ॥ चामरे ॥ त्रि०असङ्गते ॥ नानाप्रकारमिश्रिते ॥ यथा । प्रकीर्णं पुष्पाणांहरिचरणयोरञ्जलिरयमितिवेणीसंहार ॥ विस्तृते । विक्षिप्ते ॥ य० । प्रकीर्णभाण्डमनवेक्ष्यकारिणींसदैवभर्त्तु प्रतिकूलवादिनीम् । परस्यवेश्माभिरतामलज्जामेवंविधांस्त्रींपरिवर्जयामीतिलक्ष्मीचरित्रम् ॥ प्रकीर्यतेस्म । कृविक्षेपे । क्त ॥

प्रकीर्णक । पु०अश्वे ॥ न० चामरे ॥ विस्तारे । ग्रन्थविभेदे ॥ पापवि० ॥ यदनुक्तं तत्प्रकीर्णकम् । अनुक्तम०अनुक्तनिष्कृतिकम् । प्रकीर्णपातकेज्ञात्वागुरुत्वमथलाघवम् । प्रायश्चित्त बुध कुर्यात्ब्राह्मणानुमतेसदा ॥ विवादपदे ॥ नष्टं यच्चपूर्वेषुसर्वं तत्स्यात्प्रकीर्णकम् ॥ सञ्ज्ञायाकन् ॥

प्रकीर्त्तित । त्रि० कथिते ॥ प्रकर्षेणकीर्त्तित ॥ यथा । प्रभूतमल्पकार्यंवायोनर कर्त्तुमिच्छति । सर्वारम्भेणतत्कुर्यात् सिंहादेकंप्रकीर्त्तितम् ॥

प्रकीर्य्य पु० पूतिकरञ्जे । कलिकारके । काठकरञ्ज०इ०भा० । नाटाकरञ्ज०इ० गौ०भा० ॥ घृतकरञ्जे ॥ रीठाकरञ्जे ॥ त्रि०विप्रकीर्ये ॥ प्रकीर्यते । कृ० । अघ्न्यादित्वाद्यक् ॥

प्रकृत त्रि०प्रस्तुते । प्रकरणप्राप्ते ॥ यथा । प्रकृतमनुसराम ॥ प्रकर्षेणकृते ॥ अविकृते ॥ प्रक्रियतेस्म । कृञ् क्तः ॥

प्रकृतार्थं त्रि० प्रकरणप्राप्तस्याऽभिधेये प्रकृति । स्त्री० अमात्यादिषु ॥ तेच । यथा । स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानिच । राज्याङ्गानिप्रकृतय । इति ॥ प्रकृते प्रभावस्तू क्तोदेवीभागवतेइन्द्र प्रतिहरिश्चन्द्र नृपेण यथा । भुङ्क्तेशक्रनृपोराज्य प्रभावात्प्रकृतेर्ध्रुवम् । यजतेचमहायज्ञै कर्मपुंतंकरोतिचेति ॥ प्रकृष्टंकरोतिराज्यमिति । क्तिच् ॥ स्वभावे ॥ सासिद्धिकीस्वाभाविकी सहजाप्रकृताचया । प्रकृति सेति विज्ञेयास्वभावनजहातिया ॥ जातौ ॥ लिङ्गे ॥ लिङ्गम् ० व्यक्तम् । स्त्री पुन्नपुंसकञ्चेतिस्वामी । यथा ० हृतीयाप्रकृति शण्ढ ॥ पौरवर्गे । पौराणांश्रेणिषु ॥ शिल्पिनि ॥ शक्तौ ॥ सापञ्चविधायथा । सापञ्चविधायथा । गणेशजननीदुर्गाराधा लक्ष्मीसरस्वती । सावित्रीचसृष्टिविधौप्रकृति पञ्चमीस्मृतेति ॥ निरुक्तिस्तु । प्रकृष्टवाचक प्रश्चकृतिश्चसृष्टि वाचक ' । सृष्टौप्रकृष्टायादेवीप्रकृति साप्रकीर्तिता ॥ गुणे प्रकृष्टे सत्त्वे चप्रशब्दोवर्ततेश्रुतौ । मध्यमे वर्ततेप्रश्चकृतिश्चसृष्टिवाचक सृष्टेराद्याचयादेवीप्रकृति ' साप्रकीर्तितेति ॥ योषिति ॥ परमात्मनि ॥ प्रत्ययात्पूर्विकायाम् । प्रत्ययात्प्रथमे ॥ साद्विधा । धातु प्रातिपदिकञ्च ॥ पञ्चमहाभूतेषु ॥ करणे ॥ गुह्ये ॥ जन्तौ ॥ एकविंशत्यक्षरायाञ्छन्दोवृत्तौ ॥ एकविंशतिर्च्छन्दे ॥ मातरि । जनन्याम् ॥ सामर्थ्ये ॥ योनौ । उपादानकारणे । मूलप्रकृतौ । सत्वरजस्तमसासाम्यावस्थायाम् ॥ यथा । सत्व रजस्तमश्चैवगुणत्रयमदाहृतम् । साम्यावस्थितिरेतेषाप्रकृति.परिकीर्तिता ॥ केचित्प्रधानमित्याहुरव्यक्तमपरेजगु । एतदेवजगत्सृष्टिं करोतिविकरोतिच ॥ मूलप्रकृतिरविकृति । प्रकरोतीतिप्रकृति । साअविकृति प्रकृतिरेवेत्यर्थ. । कस्मात् ० इत्यत उक्तमूलेति । मूलञ्चासौप्रकृतिश्चेति ० मूलप्रकृति । विश्वस्यकार्यकलापस्यसामूलनत् त्वस्यामूलान्तरम् ० अनवस्थाप्रसङ्गात् । नचानवस्थायामस्तिप्रमाणमितिभाव । इति साङ्ख्यविद ॥ अविद्यायाम् ॥ प्रकृतिर्नाममाया । साचसत्वरजस्तमोगुणमयीअघटनघटनापटीयसीमिथ्याज्ञानात्मिका पारमेश्वरीशक्ति ॥ प्राग्जन्मकृतधर्माधर्मज्ञानेच्छादिसस्कारेवर्तमानजन्मन्यभिव्यक्त ० सर्वेचवलवति ॥ पुरुषार्थप्रसहेतुभूतायामनिर्वचनीयस्वभावाया त्रिगुणात्मिकायासर्वविकारकारण

भूतायांभगवन्मायायाम् ॥ मायान्तु प्रकृतिविद्यात् । प्रक्रियतेऽनयेति-प्रकृतिरुपादानकारणविद्यानाम्नी-यादित्यर्थः ॥ पराऽपरभेदेनप्रकृतिर्द्विधा । परासैवचशुलक्षणा० अपरासैवाष्टलक्षणा । यथा । भूमिरापोऽनलोवायु खमनोबुद्धिरेवच । अहङ्कारइतीयमेभिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यांप्रकृतिविद्धिमेपराम् । जीवभूतांमहाबाहोययेदंधार्यतेजगत् ॥ इति ॥ समग्राङ्गोपदेशे ॥ यत्रसमग्राङ्गोपदेशः साप्रकृतिः । यथादर्शपौर्णमासादिः । तत्प्रकरणेसर्वाङ्गपाठात् ॥ प्रकृतिवद्विकृतिः कर्तव्येतिमीमांसका-नाव्यवस्था । तत्रयस्मिन्यागे० इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यतेसाप्रकृतिः । येनचोपजीव्यते साप्रकृतिरितितदर्थः ॥ प्रकरणम् । डुकृञ्० । क्तिन् ॥ प्रकृतौ । क्तिच् ॥

प्रकृतिज । त्रि० स्वभावप्रभवे । प्रकृतेरभिव्यक्तेः गद्यादौ ॥ प्रकृतेर्जात । जनी० । ड ॥

प्रकृतित्वम् । न० तत्त्वान्तरोपादाने ॥ तदेवप्रकृतिःवसाङ्ख्यनयेऽभिमतम् । अतोयद्यपिपृथिव्यादीनामपि गोघटवृक्षादयोविकाराः सन्ति० एवंतद्विकारभेदानांपयोबीजादीनां दध्यङ्कुरादयः तथापिगवादयो बीजादयोवापृथिव्यादिभ्यस्तत्त्वान्तरम् । सर्वेषांगोघटादीनांस्थूलत्व-मिन्द्रियग्राह्यत्वञ्चसममितिनतत्वान्तरम् ॥

प्रकृतिदान्त । त्रि० स्वभावतएवोपशान्ते ॥ प्रकृत्यादान्त ॥

प्रकृतिलय । पुं० प्रधानलये । प्रकृतौसंलये ॥ पुरुषतत्त्वानभिज्ञस्य० वैराग्यमात्रात्प्रकृतिलय । प्रकृतिग्रहणात्प्रकृतिमहदहङ्कारभूतेन्द्रियाणिगृह्यन्ते । तेष्वात्मबुध्योपास्यमानेषुलय । वैराग्यात्प्रकृतिलय ॥

प्रकृतिविकृति । स्त्री० महदादिसप्तसु ॥ महदाद्या प्रकृतिविकृतयः सप्त । प्रकृतयश्चविकृतयश्चताइति-प्रकृतिविकृतयः सप्त । तथाहि । महत्तत्वमहङ्कारस्यप्रकृतिर्विकृतिश्च मूलप्रकृते । एवमहङ्कारतत्त्वन्तन्मात्राणामिन्द्रियाणाञ्चप्रकृतिर्विकृतिश्चमहतः । एवपञ्चतन्मात्राणितत्त्वानिभूतानामाकाशादीनांप्रकृतयोविकृतयश्चाहङ्कारस्य ॥

प्रकृतिविरूपम् । न० गगनादौ ॥ तत्त्वविभाजकोपाध्यवच्छिन्नाजनकत्वात् ॥ विरुद्धरूपविरूपम् । प्रकृतेर्विरूपम् ॥ त्रि० प्रकृतेरसमानरूपे ॥

प्रकृतिसरूपम् । न० महदादिसप्तके ॥

तत्वविभाजकोपाध्यवच्छिन्नजनकत्वात् ॥ समानरूपसरूपम् । प्रकृते समानरूपे ॥

प्रकृतिस्थ । त्रि० आयतत्सुखभोगजनककर्मक्षयेप्रकृतावन्नागेसूक्ष्मरूपेणास्थिते । स्वभावस्थे ॥ प्रकृतौति ष्ठति । ष्ठा० । सुपिस्थइतिक ॥ विकारशून्ये ॥ प्रकृतौसाम्यावस्थायांतिष्ठतीतितथा ॥

प्रकृत्याख्या । स्त्री० अज्ञ पदवाच्यायातुष्टौ ॥ प्रकृतिराख्यायस्याः ॥

प्रकृष्ट । त्रि० प्रधाने । श्रये ॥ उत्तमे ॥ प्रकृष्यतेऽयम् । कृष० । कर्मणिक्त ॥

प्रकेत । पु० चिह्नभूते ॥ प्रकृष्ट . केत ॥

प्रकेतनम् । न० गृहे ॥ प्रकृष्टकेतनम्

प्रकोष्ठ । पु० भूपकक्षान्तरे ॥ विस्तृतकरेहस्ते ॥ मणिबन्धकुर्परयोरन्तरे ॥ प्रकुष्यतेऽनेन । कुषनिष्कर्षे । उषिकुषीतिस्थन् ॥ प्रविष्टकोष्ठंकुसूलवा । अत्यादयइतिसमास ॥ भुजे ॥

प्रक्खर । पु० अश्वकवचे । प्रखरे । पाखर० इ० भा० ॥ इ० श०मा० ॥

प्रक्रान्ता । त्रि० उपक्रमकर्तरि । आरम्भकर्तरि ॥

प्रक्रम । पु० प्रथमारम्भे । उपक्रमे ॥ अवसरे ॥ क्रमे ॥ प्रक्रमणम् । क्रमु० । घञ् ॥ अन्यपरिचर्यार्थक्रमपाठे ॥

प्रक्रान्त । त्रि० प्रस्तुते प्रकरणस्थे ॥ आरब्धे ॥ प्रक्रामतिस्म । क्रमु० । क्त ॥

प्रक्रिया । स्त्री० नृपादीनांचामरधारणच्छत्रधारणादिव्यापारे । अधिकारे । उत्पादने । साधने ॥ प्रकारे ॥ औषधिप्रयोगे ॥ प्रकर्षायकरणम् । डुकृञ्० । कृञ श्चेतिश । रिङ् । इयङ् । टाप् । प्रकृष्टकार्ये ॥

प्रक्रीडित । त्रि० क्रीडाकरे ॥ प्रक्रीडति । क्रीड० । कर्तरिक्त ॥

प्रक्लिन्न । त्रि० प्रकर्षेणआर्द्रयुक्ते ॥ तृप्ते ॥

प्रक्वण । पु० प्रक्वाणे । वीणाया क्वणिते ॥ क्वणशब्दे । क्वणोवीणाया चेत्यप् ॥

प्रक्वाण । पु० प्रक्वणे । वीणाशब्दे ॥ क्वणोवीणायाञ्चेतिपाक्षिकोघञ् ॥

प्रक्षर । पु० अश्वसन्नाहे । प्रखरे । पाखर इ० भा० ॥ इ० हि० भ० ॥

प्रक्षालनम् । न० धावने । मार्जने ॥

प्रक्षालित । त्रि० धौतेमार्जिते ॥

प्रक्षिप्त । त्रि० कृतप्रक्षेपे ॥ प्रक्षिप्यतेस्म । क्षिप० । क्त ॥

प्रक्षेप । पु० औषधादिषुक्षेपणीयद्रव्ये ॥ विक्षेपे ॥

प्रक्षेपणम् । निक्षेपणे ॥ प्रकर्षेणक्षेपणम् ॥

प्रक्षोभ . । पु० प्रकृष्टक्षोभे ॥ न० चलने ।

प्रक्ष्वेडन । पुं० सर्व्वलोहमयेशरे । नाराचे ॥ प्रकर्षेणक्ष्विदते । ञिक्ष्विदा अव्यक्तेशब्दे । ल्यु । पृ० ।

प्रक्ष्विदन . । पु० प्रक्ष्वेडने । नाराचे ।

प्रखर । पु० हयसन्नाहे । पाखर० हू० भा० ॥ कुक्कुरे ॥ अश्वतरे ॥ वेसरे ॥ त्रि० अत्यन्तखरे ॥ अच्यु ये ॥

प्रख्य । त्रि० उत्तरपदेतुल्यार्थवाचके । यथा । स्यु उत्तरपदेप्रख्य प्रकार प्रतिमोनिभ कृतिहेमचन्द्र ॥ म-हमान । प्रख्यपय सरस्वतीतितुल्यम् ॥

प्रख्या । स्त्री० कान्तौ । प्रख्यानम् । ख्या० । चक्षिङादेशोवा । आतश्चो पसर्गइत्यङ् । टाप् ॥

प्रख्यात । त्रि० प्रसिद्धे । प्रकृष्टख्यातयुक्ते । विख्याते ॥ प्रकर्षेणआख्यायि । ख्याप्रकथने । चक्षिङ ख्याञ्वा । क्त . ॥

प्रख्यातपितृक । पुं० प्रख्यातवप्तृके । विख्यातपितृके । आमुष्यायणे ॥ प्रख्यात पितायस्य । कप् ।

प्रख्याति । स्त्री० प्रकृष्टायाम् । प्रकृष्टायांकीर्तौ । विख्यातौ ॥

प्रख्यानम् । न० प्रतीतौ ॥

प्रगराड । पुं० कूर्परांसपरिकाद्यपर्यन्तभागे । भुजमध्योपरिभागे ॥ प्रत्यासन्नोगराड कपोलोऽस्य ॥

प्रगराडी । स्त्री० बहि प्राकारे ॥ दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थाने ॥

प्रगतजानु । त्रि० प्रगतजानुके ॥

प्रगतजानुक । त्रि० प्रज्ञौ । वातादिनाविरलजानुके ॥ प्रगतेविरलेजानुनीयस्य । कप् ॥

प्रगन्ध । पु० पर्पटे ॥

प्रगल्भ । त्रि० प्रतिभान्विते । प्रष्टव्याद्यवसरे अकौशलाप्रतिपत्त्याद्ययोगवति । प्रत्युत्पन्नमतौ । प्रगल्भते । गल्भधार्ष्ट्ये । पचाद्यच् । धृष्टे ॥ प्रौढे ॥ वाग्मिनि ॥

प्रगल्भगी । स्त्री० उदारवचसि ॥ त्रि० तद्वति ॥

प्रगल्भता । स्त्री० ज्ञानोत्कर्षे ॥ प्रगल्भभावे । उत्साहे । उद्यमे ॥ मि' शब्दत्वप्रयोगेषुबुधे रुक्ताप्रगल्भता

प्रगल्भा । स्त्री० नायिकाभेदे ॥

प्रगाढ । त्रि० कृच्छ्रे ॥ दृढे ॥ प्रगाढतेस्म । गाहू० । क्त । यस्यवि-भाषेतिनेट् ॥ भृशे ॥

प्रगाता । त्रि० उत्तमगायके ॥

प्रगाथ । पु० चतुर्थषष्ठौपादौवार्हते प्रगाथेपुनरभ्या सिस्त्वोत्तरयोरवस्ये दित्येवमादिवचनाद्यबद्दयोर्ऋचो-स्तिस्र क्रियन्तेसप्रगाथइत्युच्यते ॥

प्रकर्षेणगानंयत्र ॥ यद्वा । प्रगच्छति । गम्य० । अकर्तरिचकारकइति कर्मणिघञ् । पृषोदरादित्वाद्रेफ मकारयोर्लोपः । उक्तेर्थेरूढश्चायम् ॥

प्रगुण . । त्रि० ऋजौ ॥ प्रकृष्टागुणा यस्य ॥ प्रकृष्टलाघवादिगुणवति ॥

प्रगृह्य . । पुं० प्रातिशाख्यादिप्रसिद्धे पदविशेषे ॥ स्वरोहितवचनसन्धीयते यस्यपूर्वाचार्यैः प्रगृह्यसञ्ज्ञाविहिता प्रगृह्यते । ग्रहउपादाने । असन्नि कर्षोचग्रहैरर्थः । पदास्वैरिवाह्या पक्ष्येषुचेतिक्यप् । ग्रहिज्येतिसम्प्र सारणम् ॥

प्रगे । अ० प्रातः काले ॥ प्रगीयतेऽत्र वा । गैशब्दे । केप्रत्ययः ॥

प्रगेतन' । त्रि० प्रत्नतने । प्रातस्तने ॥ ॥ प्रगेभव' । सायञ्चिरमितिट्युट्यु लौ ॥

प्रग्रह' । पुं० तुलासूत्रे ॥ वन्द्याम् । आकृष्टमनुष्यादौ ॥ नियमने ॥ भुजे ॥ हयादिरश्मौ ॥ रश्मौ सुव र्णालुमहीरुहे ॥ रज्ञनायाम् ॥ क- र्णिकारवृक्षे ॥ प्रकृष्टाभिनिवेशे ॥ बन्धने ॥ प्रकृतिभावावग्रहाद्यभावे परस्परमत्योरसन्निकर्षे ॥ प्रगृह्यते । ग्रहउपादाने । प्रेवणिजाम् । रश्मौचेतिघञभावापक्षे० ग्रहवृद्धि त्यप् ॥

प्रग्राह :। पुं० तुलासूत्रे ॥ वन्द्यादौ नावबन्धने ॥ अभीषौ ॥ प्रग्रहे । प्रगृह्यते । ग्रह० । प्रेवणिजां रश्मौचेतिघञ् ॥ यद्वा । प्रग्र हणम् ॥ ग्रह० । प्रेलिप्सायामितिघञ् ॥ यथा । पात्रप्रग्राहेणच रतिभिक्षुः । भिक्षापात्रोपादानेन पात्रंगृहीत्वेतियावत् ॥

प्रघटावित् । त्रि० शास्त्रगण्डे ॥

प्रघण' । पुं० ताम्रकुम्भे ॥ लोहमुद्गरे वहिर्द्वारप्रकोष्ठके । अलिन्दे ॥ प्रव शन्ति' पादैः प्रहन्यते । हन० । अगारैकदेशेप्रघणः प्रघाणश्चेति साधुः । द्वारदेशेद्वौप्रकोष्ठौ । आ- भ्यन्तरोवाह्यश्च । तत्रवाह्ये प्रकोष्ठे निपातनम् ॥

प्रघस . । पुं० असुरे ॥ दैत्यप्रभेदे ॥ प्रकर्षेणात्ति । अद० पचाद्यच् । घस्लृभावे अच्युपसङ्ख्यानम् । उपसर्गेदङ्कत्युपितु० घञपोश्चेति घस्लादेश ॥

प्रघाण . । पुं० ताम्रकुम्भे ॥ लोहमुद्ग रे ॥ अलिन्दे । वहिर्द्वारप्रकोष्ठके ॥ प्रविशन्ति : पादैः प्रहन्यते । हन० । अगारैकदेशेप्रघणः प्रघाणश्चेति साधुः । वाह्ये प्रकोष्ठेनिपातनमि दम् ॥

प्रघात :। पुं० अभिसम्पाते । युद्धे ॥ प्रकर्षेणहननम्० हन्यतेवा । हन० । घञ् ॥

प्रचूर्ण । पु० अतिथौ ॥ त्रि० प्रकृष्ट चूर्णयुक्ते ॥

प्रचक्रम् । न० प्रस्थितायांसेनायां ॥ प्रस्थित चक्र सैन्यम् ॥

प्रचक्षा । पुं० बृहस्पतौ ॥

प्रचण्ड । पु० श्वेतकरवीरे ॥ त्रि० दुर्वहे । दुर्द्धर्षे ॥ प्रतापिनि ॥

प्रचण्डमूर्त्ति । पु० वरुणद्रुमे ॥ त्रि० प्रतापयुक्तशरीरे ॥ प्रचण्डा मूर्त्तिर्यस्य ॥

प्रचण्डा । स्त्री० देवीविशेषे ॥ अस्याः स्थान कगलखण्ड. ॥ श्वेतदूर्वायाम् ॥

प्रचय । पु० समूहे ॥ प्रसङ्गे ॥ पुष्पावचये ॥ शिथिलाख्यसंयोगे ॥ अयञ्चपरिमाणजनक । यथा । सङ्ख्यात परिमाणाच्चप्रचयादपिजायते । प्रचय शिथिलाख्योयः संयोगस्तेनजन्यते ॥ परिमाणतूलकादीनाशस्त्वाश्रयनाशतः ॥ इ० भा० प० ॥ प्रचीयते । चिञ् एरच् ॥

प्रचयगमनम् । न० बाहुल्येनप्रसरणे ॥ प्रचयेनगमनम् ॥

प्रचर । पु० पथि ॥

प्रचरद्रूप । त्रि० व्यक्तरूपे ॥

प्रचलकी । पु० प्रचलाकिनि ॥

प्रचलाक । पु० शराघाते ॥ शिखण्डे । भुजङ्गमे ॥

प्रचलाकी । पु० मयूरे ॥ भुजङ्गे ॥

प्रचलायित । त्रि० निद्रादिनाघूर्णिते ॥ प्रचलइवाचरति । आर्त्त क्यङ्सलोपश्चेति० सन्नतात्कर्त्तरिक्त ॥ प्रचलायाजातास्येतिवा । प्रचलायते स्म । गत्यर्थेतिक्तोवा॥

प्रचलित । त्रि० प्रस्थिते ॥

प्रचार । त्रि० सततव्यवहारे ॥ व्यक्तौ । प्रकाशे ॥ प्रचरणम् । चर० । घञ् ॥

प्रचित । त्रि० परिवृंहिते ॥ प्रचीयते स्म । चिञ० । क्त ॥

प्रचितकम् । न० दण्डकविभेदे ॥ यः प्रचितकसमभिधोधीरधीभिः स्मृतोदण्डकोनद्वयादुत्तरैः सप्तभिर्यैः ॥ यथा सुरहरयदुकुलाम्भोधिचन्द्रप्रभोदेवकीगर्भरत्नचिलोकैकनाथ० प्रचितकपटपुरारिव्रजे ह्रामदन्तावलस्तोसविद्रावणोकेशरीन्द्र । चरणनखरसुधांशुच्छटोन्मेषनि श्रेषितध्यायिचेतोनिविष्टान्धकार० प्रणतजनपरितापोग्रदावानलोच्छेदमेघप्रसीदप्रसीदप्रसीद ॥

प्रचीयमान । त्रि० पुष्यमाणे ॥

प्रचुर । त्रि० प्रभूते । प्राज्ये बहुले ॥ प्रचोरयति । चुर० । इरपधेतिक । चुरादीनाणिज्वैकल्पिकः ॥ प्रगतश्चुरायाइतिवा

प्रचुरपुरुष पु चौरे ॥ बहुनरे

